ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुल कांगड़ी विश्वविद्यालयस्य मासिक पत्रिका ]

आषाढ २०२५, जून-जुलाई १९६८, वर्षम् २०, अङ्क ११, पूर्णाङ्क २३९

## श्रुति-सुधा

(ऋषि –मध्य तिथि काण्व । दवता–ऋभव । छन्द – गायत्री)

त नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते
एकमेक सुशस्तिभि ।। ऋ० १।२०।७

( ? ) व ऋभु ( न सुन्वत ) हम सवन करने वालो के लिये ( त्रि आ साप्तानि ) तीन वार सात अर्थात इक्कीस ( रत्नानि ) रत्नो को ( एक एक ) क्रम से प्रत्येक को ( सुशस्तिभि ) उत्तम कथनो व ज्ञानो के साथ ( धत्तन ) धारण करावें।

ऋतमयी ज्ञान रश्मिया २१ रत्नो को धारण कराती है। इन रत्नो के सम्बन्ध मे भी हमने "ऋतु दवत" नामक पुस्तक में विचार किया है। यह, यह कहना है कि "भू" आदि सातो लोको का तीनो अवस्थाओ में तदनुकूल ज्ञान होना २१ रत्नो को धारण करना है। सातो लोको की रमणीयता का ज्ञान होना और उन का सुशासन, सुशस्ति कर सकना २१ रत्नो का धारण करना होता है। इसी भांति २१ रत्नो का परिगणन अन्य कई क्षत्रो व दृष्टियो से भी हो सकता है ?

★★★

# भर्तृध्रुवसुतशब्दस्याभिप्रायः

श्री डा० मञ्जुलमयङ्कपन्तुलः वेदव्याकरणाध्यापकः, विश्वभारती, शान्तिनिकेतनम्

मैत्रकराजवंशप्रशासितायां वलभ्यां द्वौ भर्तृध्रुवौ लभ्येते। एकस्तु धरषेणस्योत्तराधिकारी तस्य कनीयान् भ्राता, ध्रुवषेणो बालादित्यः य. खलु ६२६ तमे पश्चादीस्वीये वत्सरे उपतत् वा वलभी शशास। तस्मिन्नेव शासति ह्वेन्त्सांगनाम्ना चैनिकेन पर्यटकेन भारतभ्रमणमकारि। वयं च ततः अधिगच्छामः यदेष एव भूपतिः, यस्य नाम एकस्मिंश्चित् ताम्रपत्रे ध्रुवपटुर्वा ध्रुवभट्टो वा इत्युल्लिखितमस्ति, हर्षस्य जामाता[1] आसीत्।

अन्यश्च ध्रुवभट्टः शीलादित्यः षष्ठः, यस्य च कालः, ७६२–७७ तम. पश्चादीस्वीयः वत्सरः, निर्दिश्यते इतिहासविद्भिः, मैत्रकराजवंशस्यान्तिम आदित्य., यस्मिन् अस्तंगते, न पुनः सकृदपि उदियाय मैत्रकवंशदिवाकरः।

उभयोरपि भर्तृध्रुवयोः, स्कन्दस्वामिनो भर्तृध्रुवः कतरः इति सम्भावयितु, शतपथब्राह्मणभाष्यकारस्य हरिस्वामिनः तौ श्लोकौ अपि, आपाततः, प्रासंगिकौ भवतः, ययो. स्कन्दस्वामी हरिस्वामिनो गुरुत्वेनोल्लिख्यते। तौ च इमौ —

यः सम्राट् कृतवान् सप्तसोमसंस्थास्तथर्क् श्रुतिम्।
व्याख्यां कृत्वाध्यापयन्मा श्रीस्कन्दस्वाम्यस्ति मे गुरु
यदादीनां[2] कलेर्जग्मुः सप्तत्रिंशच्छतानि वै।
चत्वारिंशत्समाश्चान्यास्तदा भाष्यमिदं कृतम्॥

एतयोः हरिस्वामिना स्वगुरोः स्कन्दस्वामिन. वैदुष्यं प्रशंसता यत् गर्वोक्तिपुर.सरं वचः अभ्यधायि, तदपि कथमपि उपेक्ष्यं नास्ति। स्कन्दस्वामिनं सम्राडादिपदैरलंकुर्वन् हरिस्वामी गुरुगौरवेण आत्मानमपि गौरवान्वितं कर्त्तुम् एव, एतादृशीभिः उक्तिभि, स्वगुरुं प्रशंसयामास। "[3]किन्तूभयोरपि पद्ययोः सर्वमहीयान् अंशो वर्त्तते कालोल्लेखस्य। हरिस्वामिना निर्दिष्टश्च कालः संकलनावकलनाभ्यां ६३८तमः पश्चादीस्वीयः वत्सर उपतत् वा तिष्ठति।"

एतस्मिन्नेव काले ध्रुवषेणो बालादित्यो द्वितीयोऽपि वलभीवल्लभो बभूव। अयमेव च स्मिथसंज्ञकेनापि विदुषा ध्रुवभट्टत्वेन स्वीकृत, यः खलु वलभ्या. स्वकीयो [4]भूपतिः, सकलोत्तरापथनाथस्य हर्षस्य जामातापि बभूव।"

"ध्रुवभट्टस्य चास्य ६३२तम पश्चादीस्वीयात् वत्सरादारभ्य ६३८तम पश्चादीस्वीयवत्सरमिति यावत् ऐतिह्यं यद्यपि अन्धकारावृत तथापि तदानीन्तनमस्य साम्राज्यं वलभीत आरभ्य आधुनिकरतलामराज्यपर्यन्तमासीत्, इति विज्ञायते, [5]नौगवाताम्रपत्रलेखे।" अद्यावधि समुपलब्धैतत्कालीनताम्रपत्रलेखेषु असौ सकलकलाकलानिधि., पाणिनिव्याकृतिप्रोक्तविभावितज्ञः (शालातुरीयः) नीतिविद्याविशारदश्चेति वर्णित [6]।

अथ ध्रुवभट्टहरिस्वामिनोश्च कालोल्लेखात्, उभयोरपि कालसाम्यात्, असदपि ऐतिह्यानुमोदित, स्कन्दस्वामिनिर्दिष्ट भर्तृध्रुव चेत् एनमेव ध्रुवषेणद्वितीय भर्तृध्रुवमङ्गीकुर्मः, तर्हि स्कन्दस्वामिनः भर्तृध्रुवसुतत्वं, तस्य सम्राडादिपदालंकृतत्वं, हरि-

---

1 R. C. Majumdar — The History and Culture of Indian People—classical age.

२ यदाब्दानामिति स्वीकृतः पाठः।

३ प्रा. भगवदत्तः—वैदिक वाङ्मय का इतिहास।

4 Smith—Early History of India.

5 K. K. Virjee — Ancient History of Saurastra, XIIth chapter.

6 K. K. Virjee—Ancient History of Saurastra XIIth chapter.

स्वामिनश्च कालोल्लेखप्रामाणिकत्व, सर्वमपि हस्तामलकवत् साध्येत । तथा सति ७६२-७७६ तमेषु पश्चादीस्वीयेषु वत्सरेषु भ.विनः ध्रुवभट्ट-शीलादित्यषष्ठस्य प्रसगो वार्यते । तथा च भाष्य-कारोल्लिखितस्य भर्तृध्रुवपदस्य, ध्रुवभट्टोपाख्ये ध्रुवपेणद्वितीये वालादित्ये ग्रन्वये वृते मृतशब्दस्य च पुत्रार्थके स्वीकृते, भर्तृध्रुवस्य असौ सुत इति सर्वथापि उपपद्यते । यद्यपि भर्तृध्रुवपदन वलभ्या राज्ञि भर्तृध्रुवे स्वीकुर्वति, स्कन्दस्वामिनो राजपुत्र-त्व सभाव्येत नून, किन्तु तथा सति अद्यावधि प्रसाधिता ऐतिहासिकी शोधपरम्परा विहन्यते । भूयश्च इतिहासविद्भि, वलभीप्रशासका मैत्रक-वशीया राजान, क्षत्रियत्वन स्वीकृता न च प्रमाणै स्कन्दस्वामिन क्षत्रियत्व कथमपि सिद्धचति । भाष्योपलब्धै कतिपयै वाक्यै तस्य ७राजपरि-चिनि ८नृपसान्निध्य, ९राजपौरोहित्यम्, इति-हासाश्रयेण च शासन उच्चै १०पदावलम्बिता वा सभावयितु शक्यते न च राजपुत्रत्वम् ।

अथापि उपरते वलभ्या. भर्त्तरि ध्रवभत्तरि तदुत्तराधिकारित्वेन तत्सुत धरषेण११ चतुर्थ कमपि पश्याम, येन मैत्रकराजवशैतिह्ये सर्वस्मात् प्राक् चक्रवर्त्तिसम्राडादि उपाधय दध्रिरे । न चोभ-योरपि धरषेणस्कन्दस्वामिनो एकपुरुषत्व युज्यते कल्पितुम् । यतो हि हरिस्वामिन भाष्यसमाप्ति-काल ६३८तम पश्चादीस्वीय वत्सर, धरषेण-चतुर्थस्य च राज्याधिरोहणकाल ६४१तम पश्चादीस्वीय वत्सर स्वीक्रियते इतिहासज्ञै १२ । धरषणे चतुर्थे अपि जाते उत्तराधिकारिणि, स्कन्द-भट्ट१३ कमपि (यस्य चान्वय अस्माभि स्कन्द-स्वामिनि एव कृत) धरषेणस्य समकालीनमपि पश्याम । एवन्तर्हि, हरिस्वामिना सम्राडादिपदैर-लकृत भर्तृध्रुवसुतश्च क असौ स्कन्दस्वामीति प्रश्न समाधानमपेक्षते ।

## समाधानम्

वस्तुत मैत्रकराजवशोद्भवाना राज्ञामिय परम्परा बभूव यत् दूतकलेखकादिपदेषु स्ववशी-यान् युवराजान् अथवा लब्धप्रतिष्ठान् विदुषो ब्राह्म-णान् वा नियोजयन्ति स्म । एतस्मिश्च काले शासति ध्रुवभट्टे ( भर्तृध्रुवे ) तस्य उत्तराधि-कारिण धरषेणचतुर्थस्य च राजत्वे स्कन्दभट्ट (यस्य चर्चा अस्माभि प्रागेव कृता) कमपि लेखकपदाव-लम्बिन कालान्तरे च १४दिविरपतिपदावलम्बिन च पश्याम । चेत् स्कन्दभट्टमेव एन स्कन्दस्वामिन कल्पयामहि तर्हि भट्टस्वामिशब्दयो मिथो वैषम्यात् न तत् युज्यते । अथापि, स्कन्दस्वामिना, भाष्योप-सहारपद्येषु, स्वपितु निर्देश भर्तृध्रुवेति नाम्ना व्यधायिष्ट यावत् स्कन्दभट्टस्यास्य ऐतिह्यसमत पितु नाम १५वत्रभट्टिरिति लभ्यते ताम्रपत्र-

---

७ यस्माच्चार चक्षु मन्त्रशक्तियुक्तश्च । स्क. ऋ वे भा १।३२।८ ।

८ आश्रितानुग्रहेण हि आधिपत्य पूज्यते कीदृशो सः प्रभु यो नानुग्राहक । स्क ऋ वे भा १।८०।१ ।
महाप्रभावाश्च आश्रिताना सुखकरा भवन्ति । स्क ऋ वे भा १।३६।१२ ॥
यथा कश्चिन् राज्ञ बलवतः अर्थाय सर्वाभि-प्रेतसिद्धि कुर्वन् दौत्य गच्छेत् । स्क ऋ. वे भा १।७७।४॥

९ शान्तिकपौष्टिककर्मभिः यो राजानमापद्भ्य-स्त्रायते, स पुरोहित इत्युच्यते । स्क ऋ. वे. भा. ७।१।१॥

10-11 Krishna Kumari Virjee — Ancient History of Saurastra

12-13 Krishna Kumari Virjee — Ancient History of Seurastra.

14-15 K. K. Virjee — Ancient History of Saurastra.

लखेषु। अर्थात् उभयोरपि पितापुत्रयोः नाम्नो भट्टस्वामिशब्दयोः विरोधः पितृकल्पनायाञ्च वत्रभट्टिभर्तृ ध्रुवयोः विरोधः समापतति। किन्तु शक्यते एष व्याघातः वारयितुम् एकेनचित् ऋजुना उपायेन। तदत्र भाष्यकारोल्लिखितस्य भर्तृध्रुवशब्दस्य भर्तृपदं व्यक्तिवाचकं ध्रुवपदञ्च अधिकारवाचकं स्वीकृत्य, भाष्यकारप्रयुक्तः भर्तृ ध्रुवशब्दः उपपरीक्षितुं शक्यते। मैत्रकराजानाम् च राजत्वे बभूव १६"ध्रुव" इत्येकमधिकारपदमपि। ध्रुवपदावलम्बिनश्च१७ धान्यसंग्रहीतॄणामुपरि, यतः संग्रहीतारः स्वभागात् अधिकम् न संग्रहणीयुः, इति पर्यवेक्षितुमेव भवन्ति स्म। उपर्युल्लिखितो वत्रभट्टिः, ध्रुवषेणे बालादित्ये द्वितीये शासति १८लेखकपदमलञ्चकार। अस्य लेखकपदं वीक्ष्य, प्रागसौ ध्रुवपदावलम्बी अपि आसीत् इति सर्वथापि अनुमातुं शक्यते। ध्रुवपदात् शनैः शनैः पदवृद्धया असौ लेखकपदे प्रतिष्ठितो बभूव, यस्य चोत्तराधिकारित्वेन, तत्पुत्रः स्कन्दभट्टोऽपि लेखकपदमवापेति१९। वत्रभट्टिपदे, वत्रपदं, भर्तृपदस्य अपभ्रंशरूपं सर्वथाऽपि संभाव्यते। विशेषतः तदानीन्तने २०अपभ्रंशपरे समाजे, यदा अपभ्रंशेन साहित्यनिबन्धनं न केवलं मनोविनोदनाय अपितु "यशसे गौरवाय चापि बभूव। अतएव स्कन्दोल्लिखितः भर्तृध्रुवः ध्रुवोपाधिधारी वत्रभट्टिरेव, यस्य संस्कृतभाषाया साधुनाम "भर्तृ" इत्येव संभाव्यते। भाष्यकारेण च, ध्रुवपदमलं कुर्वति स्वपितरि, भाष्यं व्यरचि अतएव नाम्ना सह पदस्यापि उल्लेखः कृतः। किन्तु ध्रुवपदमल कुर्वतः स्कन्दभट्टस्य पितुः कियदवधिकः ध्रुवपदावलम्बिताकालः इत्यस्माभिः सम्यक् न ज्ञायते। सति निश्चिते ज्ञाने,

16 Mihar Ranjan Ray — "The Maitrakas Valabhi. Indian Historical Quarterly' 1928, P. 471.

17 Buhler — Grants from Valabhi, Indian Antiquarry, Vol. V. 1876.

१८ एतस्यैव प्रवन्धस्य परिशिष्टखण्डे तालिका द्रष्टव्या।

19 Krishna Kumari Virjee—Ancient History of Saurastra.

२० भर्तृशब्दस्य बहुरूपात्मिकाः विकृतयः दृश्यन्ते। वलभीप्रयुक्ताभ्रष्टनाम्नां च कृते आधुनिकापभ्रंशभाषाविज्ञानस्य साहाय्येन याथातथ्यं निर्णेतुन्न शक्यते। अद्यत्वे प्रसाधितानाम् अपभ्रंशभाषाकोशानां सकीर्णत्वात्। आधुनिकानाञ्च विनिगमनपद्धतेः एकदेशीयत्वात् न सर्वेषामपभ्रंशशब्दानां संस्कृतरूपे स्थिरीकर्त्तुं शक्यते। प्राचीनापभ्रंशे प्रचलिता अपि शब्दा अद्यत्वे नवनवं रूपं जगृहुः। उदाहरणार्थम् वर्त्तिकाशब्दमेव गृह्णीमः। अस्यशब्दस्य अपभ्रंशपर्याय. 'चवड' इति शब्दः भाष्यकारेण दर्शितः। चवड शब्दस्य मूलं वर्त्तिका यच्च संस्कृतम्, आधुनिकानां भाषाशास्त्रिणां कल्पनयापि असम्मतम्। तथैव अरित्र शब्दस्य अपल्लक इति अपभ्रंशरूपं कुत्रापि नोपलभ्यते। 'गुर्जरदेशीयभाषायामपि नेमे शब्दाः लभ्यन्ते। अद्यावधि प्रसाधितेषु शब्दकोषेषु, अपभ्रंशभाषानाम्नि मुद्रितेषु व्याकरणेष्वपि एतेषामभाव.। किन्तु मुद्रितग्रन्थेषु भाष्यकारप्रयुक्तापभ्रंशशब्दानामनुपलब्धे नैतेषां मान कथमपि क्षिणोति। वलभी, प्रशासकाना दानपत्रेषु उपलभ्यमानानां नाम्नामपभ्रंशरूपाणि विलोक्य भर्तृशब्दस्य वत्र अथवा वत्रि इत्युभयविधमपि अपभ्रंशत्वं सर्वथा संभाव्यते। स्वयं भर्तृध्रुवस्यैव ( राज्ञः ) नाम ध्रुवभट्टः, ध्रुवभटः, धरपट. प्रभृति नानापर्यायेण लभ्यते। अत्र वत्रिशब्दः भर्तृशब्दस्यैव अपभ्रंशः इति उपस्थाप्यते।

भाष्यस्यापि निश्चित रचनाकाल सम्यगज्ञास्यत । स्कन्दभट्टस्कन्दस्वामिशब्दयोरपि अमुनैव प्रकारेण, वैषम्यम् अपाकर्त्तु शक्यते । सस्कृत भाषाया भर्तृस्वामिशब्दौ, मूलत पर्यायार्थकौ एव । भर्तृशब्दस्य चापभ्र शरूपगतस्य भट्टशब्दस्य स्वामिनि शब्दे अपि सर्वथा सद्भावात्, स्कन्दभट्ट-स्कन्दस्वामिनोश्चैकपुरुपत्व सभावयितु शक्यते । अथ वत्रभट्टिस्कन्दस्वामिनोश्च यौ मिथ पितापुत्रौ भवेताम्, भट्टिस्वामिनो उपाधिवैषम्यात् अन्यो-ऽन्यस्य पितापुत्रत्वे व्याघातो नैव भवितुमर्हति । सन्ति इतराण्यपि ऐतिह्यानुमोदितानि प्रमाणानि यत्र पितुर्नाम अन्यदुपाधिक पुत्रस्य च अन्यदुपा-धिक, युगपदेव पश्याम । तद्यथा "चन्द्रगुप्तद्वितीय-स्य अमात्यपदमलङ्कुर्वत शिखरस्वामिन पुत्र पृथ्वीषेण, सेननामान्त, कुमारगुप्तप्रथमस्यामात्य पश्याम २१ ।" अत्र हि पितुर्नाम स्वामिन्नन्त पुत्रस्य च सेनान्तम । इह च सत्यपि उपाधिवैषम्ये उभयो-रपि पितापुत्रत्व नैव व्याहन्यते । अतएव वत्रभट्टि-स्कन्दस्वामिनोरपि सङ्क्रामान्तोपाधिवैषम्यात्, प्रतिपाद्ये दोषादर्शनात्, उभयोरपि मिथ पिता-पुत्रत्व स्वीकारे तावद्दोषो नास्ति यावदन्या काचन विपुलविवरणा भूयसी शोधसामग्री नोपलभ्यते ।

अथापि नेद तर्कानुमत प्रतीयते यद्भाष्यकार स्वपितु ध्रुवभट्टस्य सर्वप्रसिद्ध ध्रुवषेण नाम विहाय, अप्रसिद्धेन भर्तृध्रुवेण नाम्ना स्वपितरम अवाबोधयिष्यत् ! सति स्कन्दस्वामिनि धरषेण-द्वितीयस्यात्मजे "ध्रुवभट्टसुतश्चक्रे" इत्युक्तावपि आपत्तिप्रसगन्नेक्षामहे । अपि च "वलभीविनि-वासी"ति पद्ये चक्रे इति लिडन्त पदमपि सन्देहपर, पद्य च इतरेणैव केनापि स्कन्दस्वामिव्यतिरिक्तेण पुरुषेण व्यरचि, इत्यपि अनुमातु शक्यते ।

तदत स्कन्दस्वामिनो व्यक्तित्वोपपरोक्षाया वराकस्य अस्यैव पद्यस्य केवल कथंकारं सर्वप्रामाण्य मिमीमहि ? इदमपि सर्वथा असभवं नास्ति यत् अध्ययनाध्यापनप्रवृत्तै अन्यै कैश्चिद् पश्चाद्वर्तिभि पुरुषै, हरिस्वामिप्रयुक्तसम्राडादिविशेषण वीक्ष्य, वत्रिध्रुवेतिपद, भर्तृध्रुवेति पदेन सशोध्य "भर्तृ-ध्रुवसुत" पदस्य व्यवहारो व्यधायिष्ट ! वस्तुत लेखकदिविरपत्यादिपदमलकुर्वति स्कन्दस्वामिनि, सम्राडादिपदैरलकरिष्णो हरिस्वामिन नास्ति अन्यत् किमपि प्रयोजनम्, ऋते गुरुश्लाघाया । न च तेन सम्राडादिशब्दस्य कश्चित् व्यतिरिक्त अर्थ सभाव्यते ऋते वरिष्ठपदावलम्बिन स्कन्द-स्वामिन । "तच्चैतत् नास्ति स्तोकमपि चित्र-करम । बुद्धगुप्तकालीनस्य १६५तमपश्चादी-स्वीयवत्सरस्य एरणस्तम्भलेखे पुरुषको मातृविष्णु, य किल विषयपतिरेव केवलम्, अधीनस्थ कश्चन कनीयान् प्रमुखो वा आसीत् "स्वयम्वरयेव लक्ष्म्या-धिगत" इत्यादिभि २२वर्ण्यते । अस्य च वाक्य-स्य साधारण अर्थ अयमेव यत् "मातृविष्णु राज्यलक्ष्मी स्वयमेव वृतवती ।" अतएव हरि-स्वामिनोऽपि सम्राट् विशेषणम् अतिशयोक्तिभर सत्, स्कन्दस्वामिन गौणमेव दिविरपत्यादिपद विशिनष्टि ।

तत शुकपुर ( चोब्बर ) ग्रामभागे शूकरपुर (पत्रिपूर) ग्रामभागे च द्वेधा विभज्य प्रतिष्ठितयो सम्राट्कुलयोरन्यतरदस्मत२३ स्कन्दस्वामी" इति साम्बशिवशास्त्रिण सभावना, सी.के. राजेन च ध्रुवभट्टस्य धरषेणद्वितीयस्य २४सुतत्वेन सभा-वित स्कन्दस्वामी अपास्यते ।

—०—

21-22 Jagan Nath — Early History of the Maitrakas of Valabhi, Indian culture, Vol, 1938-39 Page 412

२३ साम्बशिवशास्त्रिण ऋक्सहिता । पृ ४ ।

24 C K Raja — The Commentaries on Rgveda and Nirukta, The Proceedings of 5th All India Oriental Conference, Vol. I, Lahore, 1930.

# निश्चिन्तम् ससुखं च स्वपन्तु

मूललेखकः—श्रीमुगनी अब्बासीमहाशयः

अनुवादकः—विद्याभूषणः श्रीगणेशरामशर्मा, डूंगरपुरम्

नास्त्येवात्र कोऽपि संशयलवलेशो यद्धि या निद्रा बाल्यावस्थायां निश्चिन्तभावेनायाति, न सा यौवने वार्द्धक्ये चागच्छतीति । सत्यप्येवम् यौवने वार्द्धक्ये च निद्राया आवश्यकता भवत्येवेत्यत्र निषेधस्यावकाश एव नास्ति । सामान्यतो लोकानामिय धारणास्ते यन्निद्रा शूलारोपणसमयेऽपि च प्रभावयति मानवम्; परन्तु वैज्ञानिकोन्नतिविकाशक्रमेण साकमेवास्माकं जीवने यः किलैकउत्पीडक प्रभावो विवर्धमानो वर्वर्ति, सोऽस्मत्तो निद्रां दूरमतिदूरमपजहार । तथ्यमिद ग्रामीणजीवने शतं प्रतिशतं मा भूदन्वर्थम्, परन्तु नागरिके जीवने तु निद्राया अभावोऽतितरां बाधमानो वर्तते खलु ।

अपि भवन्त कदापि चाचिन्तयन् यदेवं कस्माद्भवति ? कश्चात्र ( निद्राया ह्रासविषये ) नन्तरवायी ? प्रश्नस्यास्यानेकान्युत्तराणि भवितुमर्हन्ति तथा प्रत्येक जन स्वपरिस्थितिं पश्यन्नुत्तरं प्रयच्छति । साकमेवानेनोत्तरदातुरयं विश्वासोऽपि च भवति, यत् परिस्थिते परिवर्तनसमकालमेव स ससुख निद्रामालिङ्गितुं पारयिष्यतीति ।

परन्तु वस्तुतो नैतदपि तथ्य यथार्थम् । काम परिस्थितयः परिवर्तन्ताम् मा वा परिवर्तन्ताम्, भवत्कृते तदेतदावश्यकमास्ते यन्निद्रा समागच्छेत्दीर्घजीवनार्थं, समधिकशांतिलाभायापि च । यदि च भवन्तः प्रगाढनिद्रायां शेतुं न शक्नुवन्ति, तदाऽऽगम्यताम्, वयं भवत्काठिन्य सरल कर्तुं प्रयतामहे ।

अद्य रात्रौ भवन्तं निद्रा नन्वेतदर्थं नायाति यच्छ्वोभूते भवद्भिस्तथाविधायाः परिस्थिते साम्मुख्य कर्तव्यमास्ते, यस्या अनेकवारं भवन्त पराजय स्वीकृतवन्तः सन्ति, तथास्य कारण भवद्दौर्बल्यमयोग्यता वा नास्ते वरञ्च प्रतिपक्षाश्रितस्य जनस्यात्मविश्वासो वर्तते । स किमप्यजानन्नपि चैतत् प्रदर्शयितुं चष्टते यत् स सर्वं जानानोऽस्ति तथा च भवन्त. स्वयमात्मनो मानसिक सतुलनमपजहति । यदि च भवन्त स्वस्य मानस सतुलनमक्षत रक्षितु प्रभवेयुश्चेत्तदातीव सरलतया परिस्थिते. साम्मुख्यं कर्तुं पारयरन् । एतदर्थं द्वित्रचतुष्प्रायाणि लघुलघूनि तथ्यानि समधिकमावश्यकानि विद्यन्ते ।

यदि च भवतां कृते श्व एव तद्दिनमागमिष्यद्वर्तते, तदाद्य सायंकालत एव स्वमनः प्रशान्त रक्षन्तु । रात्रौ शयनात् पूर्वं किमप्येतादृशं कार्य न कुर्युर्येन मानसोत्पीडनस्याशङ्का भवेत् । शयनसमये तानिमाञ्छब्दान् पुन पुनरुच्चारयन्तु—अहम् प्रात काले प्रशांत मन आदाय जागरिष्यामि तथा सर्व दिनं स्वमनः शान्तं रक्षिष्यामि तथा विघ्नबाधा दूरत एव परिहरिष्य इति ।"

यदि चागामिदिनस्य कृते कामपि योजनां विधातुमिच्छन्ति, तदा तामपि सायसमय एव निर्मान्तु । शयनसमये न कामपि चिन्तां स्वसमीपमागन्तुमनुमन्यन्ताम् । शयनात् पूर्वतनं समय कस्यचिद्वृत्तमस्य पुस्तकस्याध्ययने किं वा कस्मिंश्चिन्मनोरञ्जनात्मके कार्ये व्यतीयन्तु । एतदपि चाववधत्तु यदिमं समयं येन जनेन सह व्यतीयन्ति भवन्त सोऽपि च मानसोत्पीडनान्मुक्तः सन्तिष्ठेत । कथ्यते, यदि शरीरमुन्मुक्तं शिथिलं च विमुच्येत, तदा चिन्ता समीपं नागच्छतीति ।

द्वितीयं तथ्यमिदमास्ते यद्भवतां कार्ये वैविध्यं भवितुमर्हति । यदि च भवन्तोऽष्टघण्टापर्यन्त दशघण्टापर्यन्तं वा निरन्तरमेकविधमेव कार्यं कुर्वाणा भवेयु स्तदा निस्सीममवसाद क्लान्ति श्रमं चानुभवेयुस्तथा तत्प्रभावो भवन्निद्राया निपतेदवश्यम् । अत एव हि तत्र भवतां कार्य-विधौ परिवर्तनस्यावश्यकतास्ते । यदि च भवन्त कार्यालये कार्यं कुर्वन्ति, तत्र च टङ्कण, आयव्यय-गणना तथा कर्गदानां सहतिपञ्जिकासाधनादिक च भवत्कर्तव्याधीनमास्ते, तदा घण्टामेका यावदाय-व्ययगणितं साधयन्तु ततष्टङ्कणं कुर्वन्तु । कर्गद-पञ्जिकासाधनमतीव नीरसं कार्यमस्ति ततस्त-न्निरन्तरं त्रिचतुर्घण्टापर्यन्त न कुर्वतामपि स्वारम्भ-काले कि वा समाप्तिसमये टङ्कण–गणितकार्य-योर्मध्ये मध्ये घण्टामेकामेकां यावत्तदिद सम्पाद-यन्तु । कार्ये वैविध्यापादनात क्लिष्टता श्रम-बाहुल्यमायासो वा न भवति तथा कृते ह्येवं भवन्तः सुखं शेतुं पारयिष्यन्ते ।

तृतीय वस्तु यद्भवतां निद्रामपबाधते, तदस्ति नियमराहित्यम् । यदि भवन्तः स्वजीवने नियमित-रूपेण कार्यसम्पादनाभ्यासिनः सन्ति तदोन्निद्रता-रोगस्यावसरो न कदापि भविष्यति ।

चतुर्थं तथ्यमास्ते यत्तादृश्याः स्थितेः स्वात्म-रक्षणं, यया मानसोत्पीडनमात्मग्लानिस्तथा नैरा-श्यादीनि सम्भाव्यन्ते । क्रीडा-मन्दिरेषु मद्य पीत्वा रात्रिमखिलां नृत्यन्तस्तथैतदेव वास्तविकं जीवनं मन्वाना जनाः सर्वतोऽधिकमनिद्रा रोगस्य लक्ष्यभूता भवन्ति ।

शयनात् पूर्वं कस्याप्येवविधस्य कार्यस्य सम्पादनाभ्यास विनिश्चिन्वन्तु येन यदापि तत्कार्य-साधनाभ्यासपरा भवेयुर्भवन्तस्तदा निद्राशीलाः स्युः । केचिज्जनाः शयनात्पूर्वं स्नानाभ्यासं साधयन्ति, केचनोष्णपेयपानस्यापरे शिरोरुहेषु कङ्कतिक्रया प्रसाधनमन्ये हस्ते पुस्तकमादाय शयनमित्यादि । भवन्तोऽपि चैतादृश किमपि कार्यं विनिश्चिन्वन्तु तथा तत्तावत्पर्यन्तम् निय-मितरूपेणाचरन्तु यावद्भवन्तस्तदभ्यासशीला न भवेयुः ।

यदि भवन्तोऽवगच्छन्ति यद्भवतां निद्राग्रहण-विधौ कापि बाधास्ते, तदा तत्कालमेव निदान-मन्विष्यन्तु । एकस्यां दैनन्दिन्यां स्वस्वभावस्य दिनानुदिनगता वृत्तीर्लिखन्तु । शयनात् किय-त्समयपूर्वं चायपानाद्वा कॉफीपानाच्च शोभना-निद्रागच्छति, कि वापगच्छतीति । कानिचिद्दि-नानि स्वभावं परिवर्त्यावलोकयन्तु । यदि स्वभाव-परिवर्तनाल्लाभो भवति, तर्हि सार्वकालं स परि-वर्त्यताम् । यदि च हानिर्भवति चेत्तदा पूर्वतन स्वभावः पुनः स्वीक्रियताम् । रात्रौ कृतं भोजन-मपि च भवतामनिद्रायाः कारणं भवितुमर्हति । लिख्यताम् स्वदैनन्दिन्याम्—भोजनाद् घण्टाद्वय-पश्चात् शयनात् ससुख निद्राऽऽगच्छति, कि वाथवा भोजनानन्तर तत्कालम् शयनादिति । यदि च भवन्तो रात्रावेकादश-द्वादशवादनसमये स्वकार्य-नियोगात् प्रतिनिवर्तन्ते तथा भोजनग्रहणं विना शेतु न शक्नुवन्ति, भोजनाशनाद् भवन्तो निद्रायां व्यथिता भवन्ति, तदा शनै शनैर्भोजनस्य मात्रा न्यूनीक्रियताम् । कतिचिद्दिनानन्तरं भवन्तो रात्रौ स्वल्पाहाराभ्यासिनो भवेयुस्तथा पुनरस्य क्षतिपूर्तिं दिन एव कर्तुं प्रयतिष्यन्ते

स्वमनसे, शरीराय च पूर्णं विश्राममारामं च प्रयच्छन्तु भवन्तः । शरीरावयवान् क्रमेणैकै-कशः शिथिलान् विमोक्तुमभ्यस्यन्तु—समग्रं शरीरं स्वयमेव हि शिथिलतां यास्यति । कतिचन दिनानन्तरं स एषोऽभ्यासः परित्यज्यताम् । शरीरस्य शैथिल्यापादनस्य प्रयत्नोऽपि च विशिष्ट-

प्रकारकमुत्पीडनं जनयति; ततो विनैव प्रयत्नं शरीरमनसोः शिथिलीकरणस्याभ्यासो विधीयताम् ।

साकमेव शरीरेण स्वविचारेभ्योऽपि विश्राममारामं च प्रयच्छन्तु । सुनिद्रायाआगमनमनागमनमपि च भवतां शयनकालीनेषु विचारेष्वेव निर्भरमास्ते । यदि च भवन्त आत्मनो भूतकाल, वर्तमान, भविष्यं च स्वेन साकं नीत्वा स्वपन्ति, तदा जीवनपर्यन्तं सुखनिद्रां शेतुं न प्रभवेयुः । ह्यस्तनानां स्खलनानां पश्चात्तापः, श्वस्तनीनां त्रुटीनां चिन्ता च यदि भवद्भिः साकमासाते, तदा पुष्पशय्यापि वृथा स्यात् ।

यद्भाव्यमभूत्तद्भमवेव । अधुना यदि भवता समस्ता शक्तिस्तद्विषये पश्चात्ताप एवोपयुज्यमानाऽस्ति चेत्तदा नवीनकार्यस्य योजनाविधाने तथा च प्रगतिशीलतासादने या शक्तिरपेक्ष्यते, सा कुतो नु खल्वागच्छेत् ? आगमिनीनां समस्यानां समाधानाय मानसिकं सन्तुलनं क्व नु बत स्थास्यति ? श्वस्तनी चिन्ता भवद्भ्यः सुखेन शेतुं नानुमन्येत । अस्मान्मुक्तिप्राप्तये शयनात् पूर्वं कवोष्णेन जलेन स्नानमपि च लाभप्रदं संसिद्धयेन्नाम ।

अथैकदा कश्चन जनः कविमेकं पृष्टवान् यद्धि तच्छिरस उपधानेन स्पर्शमात्रादेव कथमिव स तत्कालं निद्रामनुभवति ? स उत्तरितवान्—"अहं हि शयनसमये केवलमेकमेव तथ्यं स्वावधाने रक्षामि । तच्चेदमास्ते—यो हि भगवान् निखिलं विश्वं ससर्ज, तथा चास्य विश्वस्य शताब्दीभ्यो निरीक्षणं सरक्षणं च कुर्वाणोऽस्ति, सः प्रतिरात्रं सप्ताष्टघण्टापर्यन्तं समयं यावन्मम तुच्छमिव साहाय्यं विनापि तस्य ( विश्वस्य ) निरीक्षणसंरक्षणादिकं विदधानो भविष्यतीति ।"

यदि च भवद्भिः किमपि तादृशमनुचितं कर्म व्यधीयत येन भवन्तो लज्जामनुभवन्ति, निद्रां च न लभन्ते, तदा शीघ्रमेव तत्समाधानं विधीयताम् । यदि समाधानं न सम्भवति, तदा तद्भविष्यति समाधास्यत इति विमुच्यताम् । शयनसमये तद्विचारश्चिन्तनं वा व्यर्थम् ।

यदि भवद्भिर्मिथ्याभाषणं कृतमास्तेऽथवा कस्मैचित्तादृशं वचनमुक्तमास्ते येन तद्धृदयमाघातमनुभवेत्, तदा तदर्थं तत्कालमेव हि समायाचना क्रियताम् । यदि शयनसमये भवतां स्मृतिपथे कश्चन तादृग्जनः समायात्, यस्य नामग्रहणादेवापादमस्तकं भवद्देहेरुधिरं प्रज्वलितुमारभते, तदा प्रशांतेन मनसा भवन्तः स्वयं स्वात्मानं कथयन्तु—'भगवांस्तस्य श विदध्यात्..' इत्थमाचरणाद्भवतामशांति र्दूरीभविष्यति ।

शयनार्थं स्वगलस्य मांसपेश्यः प्रशांताः स्युरित्यतीवावश्यकमास्ते । यावद्भवन्तः किमपि भाषमाणा वा ब्रुवाणा वा स्थास्यन्ति, भवन्मनः श्रृण्वत् स्यात्, भवन्तश्च जाग्रतस्तिष्ठेयुः ।

अपरमपि चैकं तथ्यमिदमास्ते—यदि च भवतामसौ धारणा बद्धमूलास्ते, यन्न कदापि निद्रा भवन्तमागच्छेत्, तदानेन व्याकुलतानुभवस्य नास्ति काप्यावश्यकता । वस्तुतो यावद्भवन्तश्चिन्तयन्ति, निश्चयेन ततोऽधिकं निद्रासुखं भवन्तः समुपभुञ्जन्ति । निरन्तरमनेका रात्रीर्यावत् सर्वथा शयनाभावोऽत्यसम्भवः । अनागतायामपि निद्रायामष्टघण्टापर्यन्तं शय्यामधिरुह्य शयनादपि त्रि चतुर्थं प्रतिशतं निद्राकार्यं पूर्णतामेति । दर्शनशास्त्रस्य प्राध्यापकस्यैकस्य कथनमास्ते यत् स घण्टाद्वयात्मकाद्वा सार्द्धघण्टात्मकाद्वा समयादधिकं जातुचिन्नो सुष्वाप, परन्तु सदैव सुनिश्चितं समयं यावत् स्वशय्यायां शयानोऽवश्यमेव हि तस्थौ । स च प्राध्यापकः ९१ वर्षायुः पर्यन्तं जीवन्नभूत् ।

एतदपि च स्मरणार्हम् यद्धि यथा यथाऽस्माकमायुर्वर्द्धते, तथा तथा निद्राया आवश्यकतापि च न्यूनतामुपैति । अतो वृद्धानामेतच्चिन्तनं वृथास्ते यत्तेऽधुना तावद्घण्टाप्रमाणं शेतुं न शक्नुवते, यावद्यौवनावस्थायां शेरते स्म । यदि प्रातर्भवन्तः शीघ्रमेवापगतनिद्राः प्रबुध्यन्ति चेत्तदा घण्टामेकां विलम्ब्य स्वपन्तु । यदि च भवद्भिर्निशीथे शेतव्यमापतेत्तदापि विषयेऽस्मिन्नचिन्तयालम् ।

भवतां स्वास्थ्यं शक्तिश्च प्रकारान्तरेणैकविधं धनसंग्रहभाण्डारमिवास्ते, यत्र भवन्तः प्रतिदिनम् किमपि किमपि गृह्णन्ति तथा प्रत्येकस्यां रात्रौ तत्र किमपि सग्रहार्थं निः क्षिपन्ति च । यदि सग्रहादस्मादादायादाय व्ययस्य क्रमोऽविच्छिन्नं प्रचलेत्तथा तत्र संग्रहं प्रति ध्यानं नार्प्येत, तदा कः परिणाम स्यादिति जानन्त्येव भवन्तः । नित्य नियमितरूपेण विश्रामः ( आरामः ) एव संग्रहशीलता वर्तते ।

जून १९६७ 'नवनीततः' साभारम्'

——:o:——

# गुरुकुल-पत्रिका

## ( वेद तथा दर्शन विशेषाङ्क )

सब पाठकों को सहर्ष सूचित किया जाता है कि 'गुरुकुल-पत्रिका' के दो अङ्क 'भाद्रपद तथा आश्विन २०२५, तदनुसार अगस्त-सितम्बर व सितम्बर-अक्टूबर ६८' **"वेद तथा दर्शन विशेषाङ्क"** के रूप में प्रकाशित किए जाएंगे । इस विशेषाङ्क में साधारण अङ्क की अपेक्षा अधिक पृष्ठ होंगे । कीमत ग्राहकों के लिए पूर्ववत् रहेगी ।

— सम्पादक ।

★★★★

(गताङ्कतोऽग्रे)

# मम संस्कृतोत्कर्षवृत्तांतः

(मनोरंजकः मार्गदर्शकश्च)

श्री विश्वनाथ केशव छत्रे, जोगलेकरवाडा, सिद्धेश्वर आल, कल्याण (जि० ठाणे)

### ३६ बंधुवर्याः काशीकराः

पूर्वोक्तैः श्री० के० र० काशीकर-महोदयैः 'पुरुषार्थं' मासिकस्य वीरकथांककृते मराठी-लेखनाय प्रथमं संप्रेर्य, परिश्रमाभ्यासपूर्वक मया लिखितं सर्वमपि विनापरिवर्तनं प्रकाश्य, मयि गद्य-लेखने दृढः आत्मविश्वासः उत्पादितः, यत् कस्यापि अल्पाशयस्य विस्तारः वा विस्तृताशयस्य संक्षेप सुखेनैव मया कर्तुं शक्यः इति । बंधुभाव मयि निबध्य ते मन्निवासं आगत्य सुखसंवादं कृतवंत । पुरुषार्थस्य विशेषांकः ततः प्रभृति मे १९५८-मम लेखं विना प्रायः नैव प्रकाशितः । मराठी-अनुवादेन सह संस्कृत लेख-कवितादि साहित्यमपि तं अनिशं मया लेखितं, प्रकाशितं च । उदा०-'अंतर्हित. पंजरतो मृगेंद्रः'- श्री शिवरायस्य आग्रात रहः निर्गमनम्-'सावधानम्' विवाह-मगलाष्टक-घोषसमये नारायणस्य (भविष्यकाले रामदासस्वामी इति ख्यातिं गतस्य) सहसा तपोऽर्थं पलायनम्, 'सुभाषचंद्र' अंतर्धाति' इति । पत्रद्वारा नवनव-संकल्प-विषये विचारविनिमयः मया सह ते सादरं कुर्वंति स्म । मया विरचितः तेषां प्रशस्त्या कै. प्रा० ना० के० भागवतैः । गांधिसूक्ति मुक्तावलेः मराठीसमश्लोकानुवादः 'धर्मचक्र'-मासिकेबहुंशेन प्रकाशित. सादरं, तथा अन्यदपि साहित्यम् । प्रदीर्घकालं व्याधिग्रस्तानां एतेषां चिरात् प्रकृति-विषयकं पत्र प्रतीक्षमाणेन मया अद्यैव श्रुतं दुःखदं वृत्तं तेषां निधनस्य । तान् द्रष्टुं समातुरोऽपि नाशक्नवम् ममैव प्रकृतेः अस्वास्थ्यात् प्रदीर्घ-प्रवासक्लेशसहने असमर्थत्वाच्च तेभ्य. इमं श्रद्धाञ्जलि समर्पयामि स्मरणपूर्वकम् ।

१. दिवंगतो हा ! सुदुत्तमो मे,<br>
बंधूत्तमः केशवनामधेयः ।<br>
दक्षः सदा मेऽभ्युदयप्रयत्ने,<br>
कदापि नोविस्मरणीय एषः ॥

२. सच्चिन्तने नित्यमसौ रतश्च,<br>
तथैव सद्वाङ्मयसंप्रसारे ।<br>
सेवाप्रिय श्रीभगवत्प्रसादाद्,<br>
देहं नवं द्राग् लभतां यथेष्टम् ॥

### ३७ प श्री सातवलकराः

एतेषां बंधुवर्याणां दृढपरिचयेन पं श्री सातवलेकराणां च विविधसाहित्यस्य प्रसंगोचितस्य जनताकृतगौरवस्य च वर्शनं, तेषां विषये पुरुषार्थबोधिनीपठनेन पूर्वमेव मन्मनसि उदितः समादरः विवृद्धः । मम प्रार्थनाम् आदृत्य, मुंबापुरीं कार्यार्थम् आगतैः तैः 'सुभाषचरितम्' काव्यस्य केचन सर्गाः सावधानं श्रुताः रचनायाः यथोचितत्वे च अभिप्रायः प्रेषितः । एकदा १९५९ तमाब्दारंभे पारडीं कन्याभिः सह गत्वा तेषां जीवनं समीपत अवलोक्य, चर्या विधाय, आतिथ्यं च स्वीकृत्य कृतार्थताम् अगच्छम् । तेषां हस्तलिखितम्

आत्मचरित्रं ( हिंदीभाषायां लिखित ) 'सातव-लेकर चरितम्–रचनायाः निमित्तेन मया समग्र पठितं, मह्यं निदर्शयति मार्गं उज्ज्वलजीवनस्य संकटमेघे. सर्वतः प्रसृते घनांधकारेऽपि । तेषां शताब्दप्रवेशनिमत्तं बहुसंख्यलोकोपयोगि काव्य, महाराष्ट्र-भाषायां विरचयितुं दिनद्वयं प्रयत्यापि श्लोकमालाधिकप्रगतिः अनाप्ता इति विलोक्य गीर्वाणवाणी मया शरणा कृता । आश्चर्यं महत् यद् तस्मिन्नेव दिने दशश्लोकात्मकं पूर्वविरचित-द्वि-त्रि काव्येभ्यः सर्वथा भिन्नं नवाशयपूर्णं सुरस च काव्यं मत्तः अनिर्मूतम् । अहो सुरभारत्याः कृपा अस्मिन् जने । एतत्काव्यं प्रकाशितं गुरुकुलपत्रिकायां नो० ह्व डिस० १९६६ अंके ।

३८ प. श्री भगवद्दत्त वेदालंकाराणां परिचयः दृढस्नेहे परिणत

१० जामातुस्त्विति सत्करोति सुहृदं श्वश्रूयथा सादरं,
छत्रेवंशजविश्वनाथलिखित हृद्यं तथा'पत्रिका' ।
श्रीमत्सातवलेकराख्यमुनिना पूते स्थले, तं श्रुतेर्
गुह्याविष्कृतये स्तुवन्, गुरुकुले मान्येत नो किं कविः।

ऐते पं. श्री सातवलेकरा गुरुकुले (हरिद्वार) पुरा न्यवसन् तेषां सप्तनवतितम-जन्मदिननिमित्तं मया विरचित गौरवकाव्यं 'पुरुषार्थ', 'वैदिकधर्म,' तथा 'गुरुकुल-पत्रिकाया'मपि हिंदी अनुवादेन सह प्रकाशितम् १९६३ सप्टेंबरमासे । अतः पंडितवरेषु सुचिरं धृतः स्नेहयुतः आदरः तद्गौरव कर्तरि मय्यपि, गुरुकुल-पत्रिकासंपादकाः पं. श्री भगवद्दत्तवेदालंकारा. बबंधुः इति स्वाभाविकम् । 'शिक्षणम्' 'वेदविमर्श' इत्येतयो. विशेषांकयोः कृते तैः साहित्यं मत्तः अर्थयित्वा प्रकाशितं तत्तदङ्के । (शिक्षासमस्या काव्य मार्च-एप्रिल १९६४ अंके 'श्रुतिमातुः प्रशस्तिः' च आगे–सप्टे १९६६ अंके) शिक्षणविषये नाटिकां लिखितुकामिनापि मया तदा अवसराभावात् काव्य विरचितम । पश्चात् तस्मिन् विषय बृहद् अंकत्रयात्मकं नाटकं प्रणीतं मया । ततः 'भारतीय-स्वातंत्र्योदयः(१७४७ १९४८)हि० नाम चतुः शतश्लोकात्मकं मम काव्यं क्रमशः प्रकाशितं संपादकैः विना विलंबं, मम प्रार्थनां त्वरितम् आदृत्य । (नो० हे-डिसे १९६५ त जुन-आगे-१९६६ पर्यंतम्)।

३९ पं श्री श्रुतिशीलशर्मणां परिचयः

पं. श्री सातवलेकरैः शतायुः समीप गच्छद्भिरपि 'अमृतलता' नाम त्रैमासिकी संस्कृतभाषाया प्रवर्तयितुं संकल्पितमिति तेषां उचितसाहित्य–प्रार्थनापरपत्रात् ज्ञात्वा तादृशेन अद्भुतसाहसेन विस्मितः अभवम् । श्री श्रुतिशीलशर्मा नामा उत्साहवान् कोऽपि विद्वान् अस्मिन् कार्ये साहाय्यकृत् लब्धः दिष्ट्या तैरिति अपि विदितम् । प्रथमांककृते 'देववाणीप्रशस्तिः' नाम सर्वथा समुचितां कवितां यत्नं विरच्य मया प्रेषिता । सा तु अग्रस्थानं लब्धवती इति भाग्यं नूनं तस्याः, उदितं तद्गुणवत्तायाः, तथा संपादकानां गुणरागित्वात् । नचिरात् पं श्रुतिशीलशर्मामहोदयैः सह संवृत्तेन पत्रव्यवहारेण मया अवगतं, यद्–नवीनापि इयं त्रैमासिकी चिरं नियमेन प्रकाश्येत, विद्यमान-संस्कतनियतकालिकेषु च समानार्हं स्थानं संपाद्य यशस्विनी भवेत्, श्रुतिशीलशर्मणां विद्वत्तया, उद्यमशीलतया माद्-नवलेखक –प्रोत्साहन-परनीति–पटुतया, आंग्लतामिल – हिंदी–मराठी

×इय काव्यरचना सद्यः प्रकाशनाभावात् विनष्ट विस्फूर्त्या त्यक्ता मया चतुर्थसर्ग समाप्ते. अनन्तरम् सर्ग-१ जन्मवृत्तांतः (५४) २ बाल्यम् (५७) ३ अध्ययनम् (७५) ४ मुंबापुर्यां (७२) श्लोकानां कुलसंख्या २५८ ।

संस्कृत-गुर्जरी प्रभृति-बहुभाषाभिज्ञत्वात्, परगुणगौरवोत्साहित्वात्, निरहंकारित्वाच्च । विनाविलंबं तैः मम ग्रावरयुक्तः स्नेहः संपादितः । तेषां दर्शनाय तैः सह सुखसंलापेच्छया च पारडीं गतवानहं पं० सातवलेकरशताब्दिप्राप्तिसमारोहं उपस्थातुं निमंत्रणानुसारम् । तदा ग्रवसराभावे सुखसंलापः न संवृत्तः परं तेषां नवयौवनं, कार्योत्साहः, पडितवरेषु शिष्योत्तमोचितभक्तिवक्तृत्वम् इत्यादि साक्षात्कृत्य तद्विषयकः मम स्नेहादरः अवर्धत ।

## ४० श्रीनानासाहेब भिडे महोदयानां रसिकत्वम्

श्री नाना साहेब भिडे-महोदयाः परिचिताः, तेषां महिम्नः स्तोत्रानुवादपुस्तकेन । (संस्कृत मराठीभाषा काव्येबद्धानुवादात्मकेन)। वाणिज्योपाधिधारिणः (B. Com) तथा संविभागविपणिव्यवसायात् (Share Bazar Business) निवृत्ता गीर्वाणभाषायां श्रद्धावराः भूत्वा भारतीयविद्याभवने अधीयंते इति ज्ञात्वा विस्मितः अभवम् । मम स्फुट कविताः विलोक्य ते आकृष्टा, सादर प्रार्थितवंतः यद् यावच्छक्यं प्रत्येकशनिवासरे कार्यसमाप्तेः अनंतरं मया दादरविभागस्थं तेषां निवासं गंतव्यं, तैः सह भुक्त्वा रात्रौ च संस्कृत-काव्यादिविषये सुखसंवादं कृत्वा, प्रातः यथेष्टं कल्याणनगरं गन्तव्यमिति । प्रथमे एव सुखसंवादे मया अभिज्ञातं यत् तेषां व्याकरणज्ञानम् उत्तमं वृष्टिः सुसूक्ष्मा रसिकत्वम् अभिजातं, ग्रंथावलोकनं विपुलं विविधं च वृत्तिश्च अभिनिवेशशून्या इति । मम रचनायां तैः दर्शिताः दोषाः मया न कदापि अस्वीकारार्हाः मताः । तैः सूचितं दोषदूरीकरणमपि निर्दोषं यथोचितं च प्रतीतम् । अंधेरि संस्कृतविश्वपरिषदि अंतिमे दिवसे (डिसेंबर-१९६१) सद्योरचितं परिषत्कार्यविषयकं काव्यं सदस्यानामग्रे पठितुं यः मया अवसरः प्राप्तः सः श्री भिडे महाशयानां प्रोत्साहनपूर्वकप्रयत्नैः एव । अद्यापि सुखसंवादार्थं मम आगमनसंकल्पः, यदि न ग्रामांतरगमनं वा अवश्यकार्यव्यापृतत्वं, तैः प्रायेण सादरम् अभिमन्यते । 'भारतीयस्वातंत्र्योदयः' काव्यं तैः सूक्ष्मदृष्ट्या अवलोकितं शुद्धीकरणं च सूचितम् । ईदृशः रसिकोत्तमः कदाचित् भाग्येन च लभ्यते । लब्धश्चेत्—

१० नवसंगतयोर्भाग्यात् क्वचित्कविरसज्ञयो ।
उत्पूर्यंते रसानदश्चन्द्रसागरयोरिव ।।

## ४१ पं श्री सुरेश उपाध्यायाः

प्रा० श्री समुद्रमहाशयानामपि, प. श्री सुरेश उपाध्यायाः परिचिताः । तैः संविद् त्रैमासिक्यां 'कालिदासप्रतिभा' कविता (संस्कृत अकेडमी-मद्रास-प्रकाशने न समावेशिता) 'प्रतापशावतयो.' नाटिका च प्रकाशिते । निमंत्रणानुसारं तेषां दर्शनाय गतोऽहं सुखसंवादानंतरं अवागच्छम्, यत् नव सुहृद् मया लब्धः भारतीयविद्याभवने संविद् उपसंपादकत्वेन, य. आदरं धारयति मदीयसाहित्यगुणेषु ।

## ४२ देवभाषायां व्याख्यानादि

ममकार्यालये सेवायाः निवतमानः प्रायः प्रत्येकः, कामपि श्रेणिं धारयन्, सहकारी वा अधिकारी, आपृच्छासमारोहे मराठिकाव्यगच्छ-

समर्पणेन मया सत्कृतः । एकदा ईदृशसम.रोहपूर्वदिने केनापि मम गीर्वाणवाग्भक्तिं जानता मित्रेण, परिहासबुद्धया बहुधा सूचितं यत् मया गीर्वाणभाषायां वक्तव्यम् अन्येद्युरिति । तस्यैतां सूचनां मया परमार्थतः गृहीत्वा, मम भाषणं लिखितं विद्युद्रथे एव । कल्याण प्राप्तश्च गृहगमनपूर्वं मम सुहृदं श्री गोले-गुरुवर्यं प्रति श्रावितं तत् । तैः प्रोत्साहित. समारोहप्रसंगे, आदौ पर्यवेक्षकस्य अनुमतिं सपाद्य, मया तद्-भाषणस्य वाचन कृतम् अशीघ्रं, स्पष्टोच्चारेण, संधि विना च । तदा प्रीतः स. मद्रदेशीयः पर्यवेक्षक अभ्यनन्दयन्मां तदर्थम् । तस्य प्रशंसामेताम् असहमानः उपपर्यवेक्षकः माम् अन्येद्युः अपृच्छदेकान्ते, 'किं ह्यस्तनसमारोहः संस्कृतसाहित्यसमेलनम् आसीत्' इति ।

२. नासिकनगर कार्यार्थं गतोऽहम् आकस्मिकरीत्या अवसरं लब्धवान् 'संस्कृतभाषायाः उपयोगः' इत्यस्मिन् विषये मराठीभाषायां व्याख्यातुं पूर्वोक्त–डा. श्रीगायधनीमहाशयप्रयत्नैः मे १९५८ वसंतव्याख्यानमालायाम् ।

३. सुभाषचरितान्तर्गतं 'स्वातन्त्र्यसमरः' नाम सर्गम् उद्दिश्य मराठीभाषायां मम व्याख्यानं संवृत्तं, मोहमयी-ब्राह्मणसभा–श्रीगणेशोत्सवे (शके १८८०) संस्कृतानुरागिणां श्री प्रभाकरपंतजोशीमहोदयानां रसिकत्वेन ।

४. कल्याणनगरे मित्रैः सह कृतेषु पाक्षिकसंस्कृतभाषणेषु, पं. पंढरिनाथाचार्यगलगलीविरचितम् ओजस्विभाषापरिपूर्णं 'लोकमान्यटिलकचरितम्' उद्दिश्य मया कृतं समीक्षणभाषणं विशेषेण उल्लेखनीयम् । तदा पूर्वोक्त श्री यशवंतराव कुलकर्णी, श्री श्याम जोशी (गु.व.रं.जोशीसुपुत्रः) इत्येतौ रसज्ञौ उपस्थितौ आस्ताम् ।

५. पुण्यपुरी–गीर्वाणवाग्वर्धिनीसभायां १९६३ जानेवारीमासे मम 'विभूतिस्तोत्राणि' पुस्तकम् अधिकृत्य होरेकपर्यं त संस्कृतभाषायां मम व्याख्यानम् अभूत् श्री गणेशशास्त्री शेंडे-कृपया । आदौ मया भाषणं सारांशरूपेण लिखितं तदर्थम् । तत्र पुनः १९६६ खिस्ताब्दे लोकमान्यसंस्मरणदिनेऽपि अकस्मात् गताय मह्य भाषणावसरः सादर दत्तः प. श्री गणेशशास्त्रिजोशीभिः ।

६. कुर्ला-विद्यालय पुस्तकविक्रयार्थं गतोऽहं प्रार्थितः वक्तुं विद्यार्थिवृंदपुरतः गीर्वाणभाषायां, नचिरात् निर्वर्त्यमाने डॉ. अंबेडकरसंस्मरणे; तथा कृतवान् 'दैवायत्तं कुले जन्म, मदायत्तं च पौरुषम्' इति सूत्रेण । गु.श्री. एकनाथपंतभावेगुणग्राहकता अत्र कारणम् ।

७. महाराष्ट्रशासनेन अनुदानेन गौरवितानां वैदिकानां सत्कारः कल्याणवासिभिः कृतः १७–४–१९६६दिनांके । तस्मिन् समारोहे दशनिमेषपर्यंतं (१० मिनट) देवभाषायां लिखितम् उचितं भाषण मया पठितम् । तत् श्रुत्वा प्रीतैः कैश्चित् संस्कृतानुरागिभिः अभिनंदितः अयं जनः नवं मित्रद्वयं च लब्धवान् । श्री नानासा० फडके महोदयैः आयोजितम् इदं भाषणम् । पं. श्री सातवलेकरसंपादितात् अथर्ववेदानुवादस्य ब्रह्मविद्यानामखंडात् 'प्रातः स्मरणम्' (पृ. ८२)सगांभीर्यम् उच्चैश्च पठित्वा तस्य आशय. विशदीकृतः स्वोद्धारमार्गदर्शि च वेदमाहात्म्यं मया प्रतिपादितम् ।

८ भारतीयविद्याभवनं पं. श्री गाडगीलमहाशयदर्शनेच्छया गतोऽहं दिष्ट्या प्रकोष्ठप्रमादेन पं. श्री दीक्षितारशास्त्रिणः दृष्टवान् संमुखम् । संस्कृतविश्वपरिषदः अंधेरी-अधिवेशने (डिसें. १९६१) तेषाम् अनुवादपाटवेन, (सरदार-पणि-

बरुर, डा मुन्शीप्रभृतिभि आङ्ग्लभाषाम आश्रित्य सर्दास कृतस्य भाषणस्य प्रतिवाक्यम् अनु वा भाषणान्ते, टिप्पणीम् अविधाय स्मृत्यैव सारा शरूपेण सद्य विरचित अस्खलित यथार्थश्च संस्कृतानुवाद ) प्रभावित अह सादर प्रणम्य स्वपरिचय दत्तवान् गीर्वाणभाषायामेव तेभ्य, अश्रावयम् च प्रात स्मरणीयान् काश्चन अनूदितान श्लोकान्, श्रीसमर्थ रामदासस्वामिविरचितमनोबोधकाव्यात् । तदनतरं प दीक्षितारशास्त्रिण प्रति मया 'सुभाषचरितम्' उपायनार्थं प्रेषितम । नचिरात् 'भवन्सजर्नल' पाक्षिकपत्रे य गौरवपर अभिप्राय तद्विषये प्रकाशित स अस्य पडितस्य प्रेरणया बहुशेन इति तर्कयामि ।

## ४३ नभोवाण्या प्रवेश

'प्रयत्नान्ते परमेश्वर' इति लोकोक्तिम अनुसृत्य मया जुलै १९५७ मध्ये 'तस्मै नमो गाधिमहात्मनेऽस्तु' नाम्नीं दशश्लोकात्मिका कविता विरच्य, मोहमयी-नभोवाणी-केन्द्रप्रमुखा केवल विज्ञापिता पृष्टाश्च यदि सा महात्मन जन्माहे २ ओक्टोबर १९५७ दिनाके उपयोजयितु शक्या कार्यक्रमे इति । विस्मयकारण यत् सद्य एव अय जन आहूत दर्शनार्थम् । अह गत्वा अपश्य विभागाध्यक्षम्–श्री केशवराव–भोले–महाशयम् । मया दर्शित कविताहस्तलिखित सकृद अवलोक्य सपदि एव तेन समतम् । नियुक्तदिने नियुक्तवलाया च तत्र श्रीभोलेमहोदयेन कविताध्वनिमुद्रण विधाय प्रकोष्ठान्तर मा नीत्वा मम कविता मदीयेनैव स्वरेण श्राविता ! अस्य अदृष्टपूर्वत्वेन अननुभूतपूर्वत्वेन च अह सविस्मय आनन्दम् अवाप्तुवम् । तत २ ओक्टोबर–दिनांके प्रात सप्तवादनसमये प्रतिवेशिगृहे नभोवाणीयन्त्रद्वारा सा कविता मया भूय श्रुता । मम कौतुकार्थ अर्थबोधे अक्षमा अपि केचन प्रतिवेशि-स्त्रीपुरुषा –जोगलेकरसदनस्था –उपस्थिता इति विशेषेण उल्लेखनीयम् । एतेषु श्री विनायकराव–आप्टेमहोदय सकटुम्ब सदैव मम वाङ्मयनियशस दर्शने वा श्रवणे उत्सुक –एकतम उपस्थित आसीत् । तदगृहिण्या 'शेजारीण' पुरुष–पात्र विरहिता एकाकिका 'मलांचे राज्य' 'शबरी- शकर' ( मूकनाटयम ) इति नाट्यत्रयलेखन मया कारयित्वा प्रयोगरूपेण अभिनीतम् द्विवारम–जोगलेकरसदने तत श्री त्रिविक्रममंदिरे आश्विन शु० ८ तिथौ रात्रौ (१९५१खि )महिलाजनाथम । स्वलिखित नाट्य मादृशेन सामान्यजनेन रचनोत्तर सद्य एव प्रयोगरूपेण द्रष्टव्यम् इति नि सशय सद्भाग्येन शक्यम एतद भाग्य च सुहृदा बाधवाना च सग्रहात लभ्यम् । यत —

> १२ दु खस्य सविभागाय सुखप्राप्त्यभिवृद्धये ।
> सुहृदो बाधवाश्चह सगृह णीयात् प्रयत्नत ॥

यदा नभोवाणीकार्यक्रमस्वीकरणाय मया कार्यालये अधिकारिण समति अर्थिता, तदा अन्यथा मम अननुकूलोऽपि पर्यवेक्षक माम् आहूय प्रशशस मम विद्वत्ताम् साभिनदनम् ! कालेन पाक्षिके गीर्वाणभारतीकार्यक्रमे नभोवाण्या प्रवर्तिते, परदाराबरकर शिवराय , हर्षक्षणानि, वाधक्यकाल इत्यता मम कविता यथावसर ध्वनिक्षेपिता अभवन् । नभोवाणीस्थ श्री मगेशपाडगावकराणां रसिकता तत्र कारणम् ।

(शेषाणामिग्यङ्के)

# श्रद्धां प्रातर्हवामहे

॥ऋक् १०.१५१ ५॥

लेखकः—ब्र० याज्ञवल्क्य, वानप्रस्थाश्रम, ज्वालापुरम्। (सहारनपुर)

यद्यपि मानवेभ्यो लोकेऽविद्यास्मितारागद्वेषाभिनिवेशाना क्लेशाना वृत्तिनिराकरणाय सम्यग्ज्ञानोपलब्धये च वेदादिसच्छास्त्रेषु यथास्थान क्रियायोगो ध्यानयोगश्च उपन्यस्तौ विद्येते। तथापि क्रियायोगध्यानयोगौ श्रद्धामन्तरेण न प्रकर्त्तु शक्येते। श्रद्धावता महाभागानामेव चित्त ध्यानयोगे क्रियायोगे च सुतराम् अवस्थीयत। नेतरेषा श्रद्धाशून्याना चित्त क्रियायोगध्यानयोगौ स्पृशति। तथाहि ऋते श्रद्धाया न कस्यापि मन पवित्रयते। मानसिकपवित्रता विना चित्तप्रसादन न कल्प्यते। चित्तप्रसादनमन्तरेण च क्वैकाग्रता? ऋते एकाग्रताया क्व खलु शान्ति? शान्तिमन्तरेण किल क्रियायोगध्यानयोगानुष्ठानाभ्यासो न सम्भाव्यते। तदिह लोके क्रियायोगध्यानयोगसम्पादनाय ब्रह्मसाक्षात्काराय च श्रद्धादेवी नितरामुपादेया।

श्रद्धया एव श्रीरामचन्द्रभगवत्पादा बृहदारण्यकेषु गत्वा धार्मिकमर्यादाप्रसर परिपालयाञ्चक्रु मर्यादापुरुषोत्तमपदवीञ्च लभिरे। श्रद्धयैव श्रीकृष्णचन्द्रा विविधपददलितजनान् रक्षयामासु परोपकारविन्यासञ्च सर्वासु दिक्षु प्रतेनु। को न वेत्ति खलु महात्मान वैराग्यनिष्ठ श्रद्धावन्त गौतमबुद्धम्? स भगवान् श्रद्धापरवशेन व्याकुलीभूत्वा तत्त्वनिर्णयार्थ गृहान्निर्जगाम स्वकीयेष्टतमञ्च उपावर्तत, केन विद्वद्वरेण्येन प्रेक्षावता न स्मर्यन्ते श्रीशङ्करभगवत्पादा? श्रद्धासामर्थ्येनैव ते तत्र भवन्तः शङ्कराचार्या मिथ्याज्ञानकलङ्कपङ्क विदीर्य सम्यग्ज्ञानाय मतिञ्चक्रुः। जगद्विख्याततमान् कृतकृत्यान् विदितवेदितव्यान् निरस्तसमस्तदोषान् वेदविद्यामार्त्तण्डान् श्रद्धावन्दारून् महर्षिदयानन्दवर्यान् प्रेक्षावान् न जानीते? श्रद्धापीयूष पीत्वा एव ते तत्र भवन्तो भगवन्त सकलयोगविद्या विदाञ्चक्रु। नहि तेषु अश्रद्धाकलङ्कपङ्कलवावसरोऽभूत्। यदि श्रद्धाभावोऽभविष्यत् तर्हि सत्यार्थप्रकाशादिसद्ग्रन्थरचना नाभविष्यत्। इतस्तु दृश्यतामिह परोपकारप्रियान् धन्यधन्यान् मान्यमान्यान् श्रद्धापुञ्जश्रद्धानन्दवर्यान् स्मरन्ति जना श्रद्धानिष्ठत्वादेव। त भवन्तो नहि कदाचित् स्वचित्ते मृत्युभय स्वप्नेऽपि उत्पादयामासु। तथैव गुरुगोविन्दनानकगान्धिलालबहादुरप्रभृतयोऽपि महापुरुषा श्रद्धावन्त एव बभूवु।

ननु कथ नाम श्रद्धा? अत्रोच्यते—"श्रत्" एष शब्दस्तावत्पठित सत्यनामसु (निघण्टौ ३।१०) श्रदुपपदे डुधाञ् धारणपोषणयोः' इत्यस्माद्धातो "आतश्चोपसर्गे ३।३।१०६" इति पाणिनीयेन सूत्रेण भावे स्त्रियामङ प्रत्यय पुनष्टापि कृते रूपस्य सिद्धि। श्रच्छब्दस्योपसख्यानम्। १।४।५६॥ वार्तिकेन श्रच्छब्दस्योपसर्गसज्ञा विज्ञेया॥

तदित्थ श्रद्धा="सत्यधारणा सत्यमति" पदविश्लेषणविन्यासेनार्थोऽभिधीयते। अमरकोशे तु—श्रद्धा सम्प्रत्यय स्पृहा॥ अमर० ३।३।१०२॥ इति पठितम्॥

लौकिकवैदिकव्यवहारौ च सत्यमत्यैव उपचर्येते। लोके तावत्त एव महीयन्ते ये श्रद्धावन्त एव श्रद्धेया भवन्ति। नहि कश्चिदपि विवेकी अश्रद्धावति पुरुषे विश्वसिति। शास्त्राध्ययनेन नास्ति प्रयोजन यदि शास्त्राध्येतरि श्रद्धा नोत्पद्येत। किं तेन मन्त्रपाठेन येन श्रद्धोपलब्धिर्न जायेत? किं तया सन्ध्योपासनया यया श्रद्धाजननी प्लायेत? कोऽय व्यवहारो यस्मिन् श्रद्धा न भवेत्? किन्नाम

आचार्यत्व श्रद्धाऽभावे ? किं तेन राष्ट्रनायकेन यस्मिन् श्रद्धा न भवेत् ?

न च कश्चिदपि अनृतव्यवहार कदापि आत्मने कामयत । मया सह "सर्वे सर्वदा नितरा सत्याप-यन्तु" इत्येषा भवति सर्वभूताकाङ्क्षा । नहि श्रद्धा शून्यव्यापार देवानाम्प्रियोऽपि समीचीनतरमङ्गी-करोति, प्रेक्षावता पुन का कथा । यश्चैवमपेक्षते सोऽन्यै सह श्रद्धालुस्स्यात् यथैव आत्मन साका-ङ्क्षा विभावनीया तथैव परस्मै भूतायाऽपि । भगवती श्रद्धा हि सुतरा श्रद्धालून् मिथ्याचरण कलङ्कपङ्कान्निवारयति भद्रतम मार्ग च प्रदर्शयति ।

तत्तावदिह प्रबन्धेऽमुष्मिन् मानवेष्टकैवल्यप्रदा वेदोपनिषद्दर्शनादिसच्छास्त्रप्रतिपादिता मिथ्याचरण-कलङ्कविध्वंसिका सुजनजीवत्पालयित्री श्रद्धामव-लम्ब्य सत्यपथपथिकाना लौकिकपारलौकिक-कल्याणप्रेप्सूना प्रेक्षावता पुरत किञ्चित् प्रमाण-पुरसरेण विचार्यतेऽस्माभि. । अस्तु तावत्पूर्व श्रद्धाविषये भगवत्यृग्वेदे कि रहस्य विलसति, इति प्रदर्श्यते

**श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।**
**श्रद्धा भगस्य मूर्धनि वचसा वेदयामसि ।।**
ऋक्०१०।१५१।१।।

यतोहि भगवत्या श्रद्धया प्रकाशस्वरूपपरमात्मा हृद्देशे प्रकाश्यते श्रद्धयैव च परमात्मोपासनादि-हविर्हूयते ब्रह्मजिज्ञासुभिः । अत सर्वदा दृढसङ्कल्पेन वय श्रद्धावन्त स्याम ।

**यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।**
**एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ।।**
ऋक्० १०।१५१।३।।

यथाहि पुरा महर्षिदेवा विपुलकामक्रोधा-हङ्कारादिषु मनोगतशत्रुषु सत्स्वपि श्रद्धादेवीमेव परिपालयामासु, महर्षित्व देवत्वञ्चाधिजग्मुस्तथैव वयमपि ईश्वरकृपया श्रद्धावन्तो भवेम ।

**श्रद्धा देवा यजमाना वायुगोपा उपासते ।**
**श्रद्धा हृदय्ययाकूत्या श्रद्धया विन्दते वसु ।।**
ऋक्० १०।१५१।४ ।।

लोके तावत् मनुष्या प्रेक्षावन्तो यजमानाश्च निखिलास्त श्रद्धा खलु अनुतिष्ठन्ति स्म समाद्रियन्ते च साम्प्रतमपि । कस्मै प्रयोजनाय तामुपासते ? इति चेत् । यतोहि सङ्कल्परूपया अभीष्टतमया श्रद्धया हि सुतरा लौकिकपारलौकिकानि सकलानि धनानि प्राप्यन्ते तेन ता श्रद्धा श्रद्धावन्त समुदा चरन्ति ।

**श्रद्धा प्रातर्हवामहे श्रद्धा मध्यन्दिन परि ।**
**श्रद्धा सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह न ।।**
ऋक्० १०।१५१।५।।

यया श्रद्धया हि अभ्युदयनिःश्रेयससिद्धि सम्पाद्यते निखिलानि धनानि च समुपलभ्यन्ते । ता श्रद्धामहर्निशम् आजीवन ब्रह्मप्राप्तये स्वकीय-क्रियाकलापे समाचरम । स परमपितृपरमात्मा सपद्येव अस्मान् श्रद्धाप्रियान् विदधातु । येन वय कृतकृत्या विदितवेदितव्या भवेम ।

'प्राक्तना देवा मनुष्याश्च श्रद्धामुपासितवन्तः, इति ऋग्वेदीयमन्त्रविन्यासेन उपन्यस्तम् अस्माभि । अन्यत्र यजुर्वेदीयमन्त्राक्षरेणापि तत्प्रतिपादनकाम-नया तत्र भवता श्रद्धिताना पुरतोऽभिधास्यते श्रद्धारविन्दम् ।

**व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।**
**दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ।।**
यजु० १९।३० ।।

यो विवेकी नरो यदा खलु धर्ममोक्षोपलब्धये व्रतमाचरति तदा तस्य प्रवृत्ति सुतरा ब्रह्मचर्य-विद्यादिश्रेष्ठशिक्षाया विवर्धते । नून ब्रह्मचर्य-विद्यादिदीक्षानुष्ठानेन प्रतिष्ठालक्ष्मीप्राप्तिर्जायते । तेन च दृढतमा श्रद्धोत्पद्यते । श्रद्धया सत्य ब्रह्म समधिगच्छति ।।१।।

**अभ्यादधामि समिधमग्ने व्रतपते त्वयि ।**
**व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितो अहम् ॥**
यजु० २०।२४ ॥

अयि व्रतपते ! प्रकाशस्वरूपप्रभो ! भवदीय-नियमानुसारेणैव सर्वदा वय व्यवहरेम मा कदापि विरुद्धम् । यतोहि ब्रह्मचर्यादिव्रत विना श्रद्धामन्तरेण च निराकारव्यापकसर्वज्ञस्वरूपस्य भवतः साक्षात्कारः सुदुर्लभतर एव वरीवर्त्ति, अतो वय भवदनुकम्पया सपद्येव श्रेष्ठव्रतवन्तः श्रद्धावन्तो भूत्वा भवन्त ब्रह्मस्वरूप समधिगच्छेम ॥२॥

नहि श्रद्धामन्तरेण तत्त्व प्राप्यते इति यजुर्वेदीय-मन्त्रद्वयोपन्यासेन प्रदर्शितम् । श्रद्धा हि मातृवत्पालयति । यथा माता दुष्टकर्मभ्यः स्वसन्तान निवारयति भद्रतमञ्च उपदिशति । तथा श्रद्धापि श्रद्धावन्तमनृतपापान्निवारयति सत्यमार्गञ्च प्रदर्शयति । तथाहि सामवेदे श्रद्धा मातृवत् प्राहु —

**श्रद्धा माता मनु कविः ॥** सा०पू०६०॥

अपि च—**श्रद्धा हि ते मघवन् पार्येदिवि वाजी वाजं सिषासति ॥** सा०पू० २८० ॥

अथापि अथर्ववेदे—

**शृण्वन्तु मे श्रद्दधानस्य देवा ॥**
अथर्व० ४।३५।७॥

**एतं लोकं श्रद्दधानाः सचन्ते ॥**
अथर्व० ६।१२२।३॥

**अजस्तमांस्यपहन्ति दूरमस्मिंल्लोके श्रद्दधानेन दत्तः ।।**९।५।७॥

**य याचाम्यहं वाचा सरस्वत्या मनोयुजा ।**
**श्रद्धा तमद्य विन्दतु दत्ता सोमेन बभ्रुणा ॥**
५।७।५॥

अन्यत्रापि—**श्रद्धा पत्नी सत्य यजमानः ॥**
ऐ० ७।१०॥

**श्रद्धां कामस्य मातरं हविषा वर्द्धयामसि ॥**
तैः २।८।८।८

**एतद्दीक्षायै (रूपं) यच्छ्रद्धा** ॥श०१२।८।२।४॥

**तेज एव श्रद्धा ॥**　श० ११।३।१।१॥

**श्रद्धैव सकृदिष्टस्याक्षितिः स यः श्रद्दधानो यजते तस्येष्ट न क्षीयते ॥**　कौ० ७।४॥

**श्रद्धस्व सोम ॥**　छान्दोग्य० ६।१२।३॥

**प्रब्रूहि तं श्रद्दधानाय मह्यम् ॥**
कठोप० १।१३॥

**तं ह कुमारं सन्त ··· श्रद्धा विवेश ॥**
कठोप० १।१॥

**श्रद्धया देयमश्रद्धया देयम् ॥** तैत्तरी०१।११।३॥

**तपः श्रद्धे ये ह्युपवसन्त्यरण्ये ॥** मुण्डको० ११ ॥

**श्रद्धावान् लभेत ज्ञानं तत्पर संयतेन्द्रिय ॥**
**ज्ञान लब्ध्वा परां शान्ति न चिरेणाधिगच्छति ॥**
गीता० ४।३९ ॥

**चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः ॥**

**श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥**
योग० १।२०॥

**श्रद्धा चेतसः सम्प्रसादः ।**
**सा हि जननीव कल्याणी योगिन पाति ॥**
व्यासभाष्यम् ॥

**अश्रद्धया हुतं दत्त तपस्तप्त कृतन्तु यत् ।**
**असदित्युच्यते पार्थ न च तत् प्रेत्य नेह च ॥**
गीता १७।२८॥

**प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता ।**
**नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम् ॥**
स्मृतिः ॥

**श्रद्धापूर्वा इमे धर्माः श्रद्धा मध्यान्तसंस्थिताः ।**
**श्रद्धा नित्या प्रतिष्ठाश्च धर्माः श्रद्धैव प्रकीर्त्तिताः ॥**
**॥१॥**

**श्रुतिमात्ररसाः सूक्ष्माः प्रधानपुरुषेश्वराः ।**
**श्रद्धामात्रेण गृह्यन्ते न करणेन न चक्षुषा ॥२॥**
**कायक्लेशैर्न बहुभिस्तथैवार्थस्य राशिभिः ।**
**धर्मः सम्प्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि ॥३॥**
**श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा ज्ञानं हुतं तपः ।**
**श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत् ॥४॥**
**वह्नि० पु०॥**

तदित्थं वेदोपनिषद्ब्राह्मणारण्यकदर्शनादि-सद्ग्रन्थेषु खलु धर्मार्थकाममोक्षोपलब्धये श्रद्धा-माहात्म्यं विपुलं नितरां वर्णितमस्ति । नात्र केषामपि श्रद्धावत्ता कृते शङ्कापिशाचीप्रसरः । अन्त-रेण श्रद्धां न चित्तशान्तिर्नापि धर्मे विश्वासप्रसङ्गो भवति । चित्तशान्तये धर्मपीयूषरसास्वादनाय च प्रेक्षावद्भिः सुतरां यत्नेन श्रद्धा विधेया, इति पूर्वं मन्त्रश्लोकप्रमाणपूर्वकं प्रदर्शितमस्माभिः ।

इह लोके तावद्विलोक्यते सर्वत्र श्रद्धाजाड्यं श्रद्धा-विघातश्च । तथाहि नोपलभ्यतेऽद्यतन कुत्रचिदपि विशुद्धः खाद्यपदार्थः । क्व खलु साम्प्रतं विशुद्धं दुग्धं प्राप्यते ? क्वेदानीं विशुद्धघृतस्योपलब्धिः ? हा हन्त ! ! नात्र भारतवर्षे कश्चित् मुमूर्षुः स्व-प्राणोपघातकामः विशुद्धं विषमपि प्राप्नोति । अन्येषां खाद्यपदार्थानां तु का कथा ? एवं हि श्रूयते यत् केचन कष्टाक्रान्ता जना रोगादिकष्टेन व्या-कुलीभूत्वा आपणाद्विषं क्रीत्वा मुमूर्षया खादितवन्तः विशुद्धविषाऽभावान्न ते मम्रुः ॥

अपि च श्रद्धास्वरूपमजानन्तोऽन्धविश्वासिनः केचन पौराणिका जैनाः शैवा वैष्णवादयश्च पाषाण-मूर्तिपूजनं तिलककण्ठी–धारणं रुद्राक्षपरिधारणमेव श्रद्धालुकृति स्वीकुर्वन्ति । वस्तुतस्तु श्रद्धाजाड्यमेव तत्कार्यं वेदप्रमाणविरोधात् । न च वेदोपनिषद्दश-नादिसद्ग्रन्थपर्यालोचनमन्तरेण श्रद्धातत्त्वमव-गम्यते । अतः श्रद्धातत्त्वविज्ञानाय श्रद्धावन्तोऽवश्य-मेव वेदादि सच्छास्त्राध्ययनसरणि सुतरामव-गच्छेयुः । पराश्चाऽवगमयेयुः ।

परमपितृपरमात्मकृपया श्रद्धजाड्यविघातय श्रद्धास्वरूपावबोधाय च भारतवर्षे वेदोद्धारकाः, समवगतवेदान्ता, विदितवेदितव्या, महर्षिदयानन्द-वर्या आजग्मुः । ब्रह्मसाक्षात्काराय सत्यमति विधाय आजीवनं स्वकीयप्रतिज्ञां परिपालयाञ्चक्रुः । इत-रानपि श्रद्धास्वरूपं वर्णयाञ्चक्रुः ।

इतस्तु दृश्यतान्तावदिह दयानन्दानुवर्त्तिन आर्यसमाजिनोऽपि श्रद्धां घ्नन्ति । प्रायेण समाजेषु प्रधानादिपदलोलुपकामा आर्यसमाजिन एव विल-सन्ति । यथैव पौराणिकाः श्रद्धास्वरूपं न विदन्ति अन्धविश्वासेन । तथैव इमेऽपि श्रद्धाहीनत्वान्न श्रद्धास्वरूपं जानन्ति । यदि कश्चिद् बुभुक्षुः श्रद्धा-हीनान् आर्यसमाजिनः स्वक्षुधावारणाय याचते भोजनं, तर्हि सम्पन्नाः सन्तोऽपि नैते ददति नापि दापयन्ति तस्मै । श्रद्धाहीना नैव आर्याः नापि श्रीमद्दयानन्दानुवर्त्तिनो भवितुमर्हन्ति । अनुकम्प-नीयास्ते अतो भगवता वेदेन यदुक्तं तदुपादेयमेव—

**श्रद्धां प्रातर्हवामहे श्रद्धां मध्यं दिनं परि ।**
**श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥**

—०—

# सम्पादकीय टिप्पण्यः

## एकता-परिषद्

श्रूयते यत् काश्मीरप्रदेशस्य राजधान्या श्रीनगर एकतापरिषदः सम्मेलन भारतवर्षस्य प्रधानमन्त्रिपदालकारभूताया श्री इन्दिरादेव्या आध्यक्ष्ये समजनि। तत्र ये प्रस्तावा स्वीकृतास्ते सर्वे सन्त्यत्युच्चकोटिका न तत्र काऽपि विप्रतिपत्तिर्भवितुमर्हति। पर विचारणीयन्त्वतद् विद्यते यत् तेषा परिपालन पूर्तिश्च कथ भवेताम्। ये विघटनकारिणो हिंसापरायणा सन्ति तषा दमन कथ स्यात्? अस्मन्मते सर्वत प्रथम सर्वेषा मनसि भारतीयत्व प्ररोहेदेष प्रयत्ना विधेय। समग्र सविधान सर्वेभ्य समानरूपेण सनियोज्य भवेत्। मुस्लिमेभ्योऽन्यत् हिन्दुभ्योऽन्यदिति नैष पन्था ऐक्यसम्पादनस्य। येषा निष्ठा भारतवर्षाद् बहिर्विद्यते सर्वप्रकारकमादेशमुपदेशादिक च बाह्यतस्ते प्राप्नुवन्ति कथ ते ऐक्यसम्पादने साहाय्य कर्तुमर्हन्ति। अत्र भारते विघटनप्रवृत्त प्रसारका के के विद्यन्ते इति गणनाया सर्वप्रथम कॉंग्रेस एवोपतिष्ठते इति ब्रुवन्ति बहवो नीतिशास्त्रविशारदा। काग्रेसे शासनाधिरूढे सति पाकिस्तानस्य निर्माणमजायत। भाषामवलम्ब्य प्रदेशाना विघटन प्रारब्ध यदधुनाऽपि न प्रशमम्मुपैत्। निर्वाचनदोषेण जातिधर्मादिवादानामुद्घोष सर्वत्राश्रूयत। किमिद निर्वाचन साम्प्रदायिकविद्वेषाग्ने प्रवृद्धिकारण न? धर्मनिरपेक्षताव्याजेन क्राइस्टमतावलम्बिना भारतदेशस्य तत्सस्कृतेश्च विरुद्ध घृणाप्रचार किं न जात? नागामिजोप्रदेशाना भारतवर्षात् पार्थक्यकरणे किमेते पादरीब्रुवाअपराधिनो न विद्यन्ते। यद्येव मन्येत यत्पाकिस्तानस्य निर्माणमन्तरा नान्या गतिरासीत् तदा तत्पूर्णरूपेण परिणेतव्यमासीत्। तद् योग्यकाले न कृतमतस्तस्य फल साम्प्रदायिककलहरूपेणावश्य भोक्तव्यम्। भगवान् एव विजानाति यत् कदा समाप्तिं यास्यति तत्। यस्य जनसमूहस्य निष्ठा यावद् भारतवर्षाद् बहि स्थास्यति तावत् साम्प्रदायिककलहाग्निप्रशमनाय सामनस्यसस्थापनाय च समुद्घोषाऽरण्यरोदनमिव प्रनिभाति, सैषा निष्ठा सामान्यजनाना स्वमत प्रत्यन्धभक्तिसवलिता भवति, विशेषतो मस्लिमेषु। अत कुतो न ते बाह्यदृष्टयो भवन्तु? अन्यच्च सन्त्यन्येऽपि बहवो बहिर्निष्ठाबन्तस्तेषु केचन रूसदेश प्रति कचन चीनदश प्रति कचिच्च अमेरिकाब्रिटेनादिदेशान् प्रनि प्रणता सन्ति। नतृवर्गेष्वपि सन्ति वहव परमुखापेक्षिणो येषामागलभाषाभक्ति किं बाह्यनिष्ठा न सूचयति? किं वय परकीयवेशभूषादिधारणे चरित्रशिक्षणे, तथान्येषु विषयेषु च तान् प्रति बद्धादरा न? एवमेव धर्मक्षेत्रे यदि मुस्लिमा क्राइस्टमतावलम्बिनश्चापि बाह्यनिष्ठावन्तो विद्यन्ते तत् किमपराद्ध तैरिति विवदन्ते पक्षपातविरहिता विचक्षणा। केवल हिन्दुधर्मावलम्बिन एवैतादृशा सन्ति येषां निष्ठा केवल भारत तत्सस्कृति च प्रति विद्यते। हिन्दुष्वपि सन्ति वहवो दोषा ये परिमार्जनीया विद्यन्ते। अत. पूर्वमस्माक राष्ट्रधूर्वहै प्राचीनसस्कृति प्रति निष्ठावद्भिर्भाव्यम्। तदनन्तर ये बाह्यदृष्टय· सन्ति तेषा दृष्टे विपरिलोप परिवर्तन वा भवेदेष प्रयत्नो विधेयः। ये च स्वधर्मप्रकोष्ठाद् बहिः प्रक्षिप्तास्ते स्वप्रकोष्ठ पुन प्रवेष्टव्या इति येन केनाऽप्युपायेन दण्डविधानेन वा हिन्दवोऽनुकूलयितव्याः। किं समाजसुधारकवर्यै श्री दयानन्दमहर्षिभि· शुद्धिपन्था अस्मभ्य न प्रदर्शितः? यदि सर्वे विपश्चितो नेतृवर्या अहकारजनितमीर्ष्याद्वेषादिकं विहाय सत्यासत्ये विनिश्चित्य सत्यमादातुमसत्यञ्च परिहर्तुं कटिबद्धा भवेयुः, लोकसग्रहार्थं च प्रयत्नजात विदध्युस्तदा भारतवर्षे ऐक्यदर्शन कुतो न भवेत्?

# साहित्य-समीक्षा

( समालोचनार्थं पुस्तकद्वयं पत्रिका-कार्यालये प्रेषणीयम् )

## चातुर्वर्ण्य-भारत-समीक्षा

### द्वितीयखण्डः

लेखकः—श्री स्वामी महेश्वरानन्द गिरिः महामण्डलेश्वरः। प्रकाशकः—श्री स्वामी कैवल्यानन्दः सरस्वती महाभागः। मूल्यं रूप्यक द्वयम्।

अस्मिन् समीक्षास्तम्भे इतः पूर्वमप्यस्माभि. चातुर्वर्ण्य भारतसमीक्षारव्यग्रन्थस्य समीक्षा कृताऽऽसीत्। असौ ग्रन्थः श्रीमद्भिर्विद्वद्वर्यैः स्वामिमहाभागैः प्रथमखण्डरूपेण प्रकाशित आसीत्। अधुना तस्यैव ग्रन्थस्यातिविस्तृतो द्वितीयखण्डोऽस्माकं हस्ते विद्यते। अस्मिन्

श्री स्वामिमहामण्डलेश्वरमहानुभावानां प्रौढपाण्डित्यं पदे पदे विलसति। कुशाग्रबुद्धित्वं तर्कानुमोदितं विचारसौष्ठवमित्यादयो गुणप्रकर्षाः सर्वत्र दृग्गोचरीक्रियन्ते। प्रथमखण्डस्तु शास्त्राणां प्रमाणै प्राक्तनेतिवृत्तपठितै र्ब्राह्मणादिवर्णपरिवृत्तिकरैर्दृष्टान्तैर्निदर्शनैश्च पल्लवित आसीत्। अस्मिन् द्वितीये खण्डे तु आधुनिकेतिहाससमागतैर्निदर्शनैः पण्डितानां कूपमण्डूकताऽनुदारताया अदीर्घदर्शितायाश्च पराकाष्ठा प्रादर्शि महामण्डलेश्वरमहाभागैः।

न केवलमर्वाचीनत्वमत्र विराजते परं प्राक्तनत्वस्यापि भूयो भूयो दर्शनमत्र जायते। गुणकर्मवादमभ्युपगम्य देशस्याभ्युदयायात क्रान्तिकारि विचाराणां समुल्लेखः पदे पदे विहितोऽस्ति। परं विचारणीय यत् सन्ति किं साहसशौर्यप्रज्ञाबलोपेताः पर्वतवत् सुदृढाः सुनिश्चला युवानो ये सर्वं प्रकाराणि हिन्दुजाते विध्वंसकराणि बन्धनानि छित्वा परिवर्त्तनायाग्रेसरा भविष्यन्ति। एव नानाशब्दैः प्रोच्चस्वरेण राष्ट्रस्य युवकेभ्यो महान् सदुपदेशः प्रदत्तः स्वामिवर्यै.। अस्मिन् ग्रन्थे विषयाणां बाहुल्यं विद्यते। बहूनि चोच्चावचान्युदाहरणान्यपि प्रदत्तानि। एवं हिन्दुजातेरभ्युदयाय महानयं प्रयासोऽखिलवेदवेदाङ्गतत्त्वज्ञाना श्री स्वामिवर्याणाम्। अतः सरस्वतीदेव्या वरदपुत्राः श्रीमहेश्वरानन्दस्वामिवर्य्याः साधुवादार्हाः। अत्रास्माकमयमभिलाषो विद्यते यदुभयोः खण्डयोर्हिन्दीभाषायामनुवादोऽपि प्रकाशनीयो येन पांसुलपादहालिकोऽपि सामान्यजनो लाभान्वितः स्यात्।

—भगवद्दत्तो वेदालंकारः।

